महेशार्धेंदुलसित बिंदुभूतामरापग ॥
शक्त्याश्लिष्टतनो शांत जगद्बीजाय ते नमः ॥ ३ ॥
अवनप्रवणो नित्यं कृतकुंजररंजनः ॥
करोतु कुशलं कोऽपि हरिर्वः खलदुःसहः ॥ ४ ॥
सुविचित्रबाणरचनं सुजनाः सुश्लोकलाघवं श्रयत ॥
स्पष्टं नृणां प्रतिष्ठा दृष्टा नूनं यतो जनस्थाने ॥ ५ ॥
न त्याज्यं सहजं सदोषमपि हे कौंतेय कर्म स्वकं ।
प्रारंभः सकलः सदोष इति हि श्रीवासुदेवो जगौ ॥
तत्काव्यप्रतिभा यतश्च सहजा नो कृत्रिमातो बुधा-
स्त्यक्त्वा दोषभयं सुदूरतरतो युक्तोऽभवद्विठ्ठलः ॥ ६ ॥

यावत्ता लाति गृह्णाति तं । शादो जंबालशष्पयोरित्यमरः। सशयो रलयोश्चैक्यं । (शं० हरौ विष्णौ सादरं । (सू०) हरिभिरश्वैर्यः सादो गतिः षद्लृगत्यादौतां लाति । (दे०) हरिणा सिंहेन यः सादो गतिस्तां लाति तत् । मध्विति (नि०) मधुनामा यः परः श त्रुस्तमुद्गतकंठं करोति तं । (ग०) मधुनि ये परा भृंगास्तेषामुत्कंठा यस्मिन् मदो दकसंभृतत्वात् । (शं०)मधुपा भृंगा रा मेघाश्च तद्वदुत्कृष्टः कंठो यस्य तं नीलकठं मित्यर्थः । रा स्वर्णे जलदे धन इति हैमः। (दे०) मधु मद्यं पलं मांसं च तयोरुत्कंठा यस्य तत् । गिरीति (वि०) गिरीशो गोवर्धनः । (ग०) शिवः । (अ०) कैलासः । (सू०) उदयाचलः । (दे०) हिमाचलः शिवो वा । तेन्नो देव्याख्यं ॥ २ ॥

महेशेति । अर्धेंदुरर्धचंद्रो नादश्च । बिंदुः पृषदनुस्वारश्च । शक्तिर्गौरी कला च । बी जाक्षरस्य बिंदुनादकलाशांताख्य। अवयवास्तंत्रे प्रसिद्धा । शातत्वं तु महेशेति पदं दर्शयति । अर्थतस्तु नित्यसमाधिनिष्ठतयास्त्येव ॥ ३ ॥

आशीरूपं तृतीयमाह । अवनेति । वनप्रवणाद्गजघातकान्नखरदुर्धरात् प्रसिद्धात्सिं हादस्य वैलक्षण्यं ज्ञेयं ॥ ४ ॥

ग्रंथस्य प्रयोजनमाह । सुविचित्रेति । बाणरचना शरप्रयोगः शब्दविन्यासश्च । सुश्लोक लाघवं पुण्यश्लोकं रामभद्रमेतन्नामानं ग्रंथ च। प्रतिष्ठाऽवस्थानं सम्मानश्च जनस्थानं स्व रालयं नासिकेति प्रसिद्धं सभा च । राघवयोगेन जनस्थाने नृणां प्रतिष्ठा दृष्टाऽनस्तदपे क्षकैस्तदाश्रयणं कार्यमितिभावः ॥ ५ ॥

ननु काव्यस्य सर्वथा निर्दोषत्वेन रचयितुमशक्यत्वात् सदोषस्य च कुत्सावदत्वात्तत्र कथं प्रवृत्तिरित्यत आह । न त्याज्यमिति। प्रतिभा स्वाभाविकीया शक्तिः । कृत्रिमाभ्यासे यानिर्वृत्ता । यतो हि सहजं कर्म कौंतेय सदोषमपि न त्यजेत् ॥ सर्वारंभा हि दोषेण धूमेनाग्निरिवावृता इति गीतायां ॥ ६ ॥

अज्ञानादथवा प्रमादवशतः काव्यं सदोषं भवे-
त्तन्निंदास्पदमित्युपक्रममिमं कुर्यां न वै तर्ह्यहम् ॥
कर्तुं हैहयराजपुंगवमिवाप्येतत्सदोषं पुन-
र्निर्दोषं न धृतव्रताः कविकुलोत्तंसा भवंतो यदि ॥ ७ ॥
पंतो यद्यहमेष माधवमिलन्मूर्धन्यमध्यास्थितो ।
दोषस्तर्हि न चाश्रयिष्यदणुरप्येतं प्रबंधं नवम् ॥
तस्माद्वेदपुराणशास्त्रनिपुणाः सभ्या भवंतः स्वयं ।
प्रायश्चित्तमिह प्रयच्छत ततो दोषः कुतः स्थास्यति ॥ ८ ॥
नूनं निसर्गतः कविरूढमलप्रशमने हि सरसानाम् ॥
प्रतिकूलतापि न भवेदनर्थकृत्कतककस्कदाचिदपि ॥ ९ ॥

किंच दोषोत्सारकाभावे तत्प्रवृत्तौ बाधकं नान्यथेत्याह । अज्ञानादिति । सदोषं दोषसहितं भुजसहितं च । निर्दोषं दोषरहितं भुजरहितं च । कविर्भार्गवः कवयिता च । सदोषं कार्तवीर्यं निर्दोषं कर्तुं भार्गव इव भवंतः कविकुलश्रेष्ठा यद्यत्र तत्काव्यं तथा कर्तुं न स्युश्चेदप्रवृत्तिः स्यादिति भावः ॥ ७ ॥

दोषोत्सारणमार्गं दर्शयति । पंत इति । यद्यहं पंतो भगवन्निष्ठवरेण्यजनमध्ये गणनीयोऽभविष्यं तर्हीमं प्रबंधं दोषोऽणुरपि नाश्रयिष्यद्भगवन्निष्ठानां हि कृतिं न केऽपि दूषयंति तत्पुण्यप्रभावात् । नह्ययं तादृशः । अथवा ‘ इंमाधवाय पुण्ड्यै नमः ’ इति केशवादिन्यासे दर्शनान्माधवस्य इकारवाचकत्वं तंत्रे प्रसिद्धं । तं मिलन् यो मूर्धन्यमध्यो डकारः । ऋटुरषाणां मूर्धेति टवर्गस्य मूर्धन्यत्वात् । तथा च डकारे कारसंयोगे डिरिति जातं तमास्थितोऽधिष्ठितः पंतः पंडितो भवति । पंडितकृतिषु दोषदर्शनेऽपि तेषां विद्वत्तया न केऽपि तं पश्यंति । ते तु महांतः कदाप्यन्यथा न करिष्यंतीति विश्वस्ताः । अहं सोऽपि न एवं च मय्युभयविधत्वाभावान्मत्कृतप्रबंधे दोषः संभवेदेव । परं त्वयं संभावितदोषः श्रीमत्पर्षदमागतस्तदत्र सर्वज्ञैः प्रायश्चित्तं नियोज्यं । दत्ते च तस्मिन्संभावितोऽपि दोषो नावतिष्ठेतेति भावः । यथात्रैवभवच्छब्दयोगे प्रयच्छेतेति मध्यमपुरुषप्रयोगोऽनुपपन्न इति दोषः । तत्र श्रीमद्भिर्भवंतीति भवंतः समर्था इति व्युत्पत्त्या प्रायश्चित्तं दत्तं चेच्छुद्धमिदं पद्यं भवति ॥ ८ ॥

ननु प्रायश्चित्तदानमानुकूल्य एव संभवेदिति चेत्तत्राह नूनमिति । कवौ रूढो मलो दोषः के जले विरूढो मलः कलुषता च । सरसानां सोत्साहानां सशक्तिविशेषाणां च । स्वभावतः कवितादोषमपहर्तुं सरसस्य जनस्य जलकलुषतामपहर्तुं शक्तस्य कतकस्य च प्रतिकूलतापि स्वेष्टहान्यै न भवति यत्सरसकतकशब्दौ प्रतिलोमतः पठितावपि तमेवार्थमभिदधात इति ॥ ९ ॥

किं काव्याद्भिरमेयमत्र हि कथंचिद्दोषसंभावना-
न्न ह्येतत्तु निरूपणीयमबुधस्याग्रे विविच्य क्वचित् ॥
किंस्वेतस्य सतोऽसतोऽपि च पुनः पात्रं स्मृताः सूरयो ।
दोषावस्थितये तु किं कथय रे कल्पेत सूर्यागमः ॥ १० ॥
विविधार्थवशा कविता वेश्येव विभात्यतश्च तां प्रति यः ॥
भूषाकरणसमर्थो दोषासंगं स एव विदधातु ॥ ११ ॥
इतिहासपुराणागमविचक्षणा दूषणस्य बलिनोऽपि ॥
सुश्लोकलाघवस्य श्लोके किल नामशेषतैव स्यात् ॥ १२ ॥
मूर्ध्न्यंजलिं विरचयन्मुहुरर्थयेऽहं ।
सुश्लोकलाघवमहो शृणुतानसूयम् ॥
जायेत चेतसि ततः सुमहाप्रसादः ।
स्यादेव वागविषयः सहजप्रमोदः ॥ १३ ॥
सुश्लोकलाघवश्लोकं विचित्रानंददायकम् ॥
सकलाः स्पृहयंत्येव हरिदासा विशेषतः ॥ १४ ॥

किं च महतां समागम एव दोषनिबर्हणायेत्याह । किं काव्यादिति । दोषावस्थिति- र्दोषस्यावस्थानं रात्रेश्चावस्थानं । सूरीणां पंडितानामागमः समागमः सूर्योदयश्च । सद्वाऽसद्वा काव्यं सूरिभ्य एव दर्शनीयं न मूर्खेभ्यः । तत्र सूर्यागमो दोषावस्थितये कदापि न दृश्यत इति भावः । सूर्यागमश्चेद्दोषाभावो दोषावस्थानं चेन्सूर्यागम एव नेति मन्यामह इति ॥ १० ॥

किंच दोषासंजनमपि भूषाकरणसमर्थेनैव कार्यं नान्येनेत्याह । विविधेति । विवि- धार्थो नानाद्रव्याणि विविधार्थोद्भावनं च । भूषाकरणमंगप्रत्यंगेषु भूषणार्पणं सम्यगु- ल्लासनं च । दोषासंगं रात्रौ रत्युत्सवं दोषासंजनं च । एवं च भूषाकर्तुर्दोषोद्भावनं भूषणपर्यवसाय्येवेति भावः ॥ ११ ॥

दोषाभासेऽपि श्रीमद्भिर्विचारितेऽत्र दोषसद्भावो नस्यादेवेति सदृष्टांतमाह । इति- हासेति । दूषणस्य दोषस्य राक्षसविशेषस्य च । यथा रामचरिते पूर्वं दूषणस्य भास- मानत्वेऽप्यंते नामशेषतेवास्ते तथात्रेति भावः । अस्य ग्रंथस्य भगवद्गुणवर्णन- प्रधानतया 'तद्वाग्विसर्गो जनताघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि । नामान्य- नन्तस्य यशोऽङ्कितानी' त्यादि भागवतोक्तेर्दृश्यमानस्यापि दोषस्यागणनीयत्वात् ॥ १२ ॥

यद्यप्येवं तथापि विद्वत्प्रणतिरेव सर्वार्थसाधनीत्याह मूर्ध्नीति । सत्कीर्तिं राममेनं ग्रंथं च । । प्रसादः नैर्मल्यं चमत्कारश्च निर्वचनीयानंदः प्रमोदो मोक्षश्च ॥ १३ ॥

यत्सुश्लोकलाघवश्लोको निर्दोषोऽतः फलितमाह । सुश्लोकेति । सकलाः कलासहिताः सर्वे च । हरिदासा गोस्वामिनः भगवन्निष्ठाश्च ॥ १४ ॥



अनुक्रमणिका

सुश्लोकलाघवश्लोकः प्रस्तुतो जनसंसादि ॥
न कस्मै रोचतां नूनमेकां खरचमूं विना ॥ १५ ॥
यदेवानिभृतं सत्यं तन्नित्यं वस्तु कीर्त्यते ॥
नास्त्येव या विचारेण सा मायेत्यभिधीयते ॥ १६ ॥
श्रीगुरोः करुणापांगपीयूषापिठरो हि यः ॥
न तमःसंभवा बाधा तस्य स्यादतिदुस्सहा ॥ १७ ॥
परमपदविजित्यै नैव सद्वंशभूति-
र्मतिरपि न वयो वा सद्गुरुः किंत्विहैकः ॥
इति कथयितुमीशः संसदस्तंभमध्या-
द्गुरु गुरु गुरु शब्दं व्याहरन्नाविरासीत् ॥ १८ ॥
नगघटितं चलघटितं जडोपरचितं च तत्कलोपचितम् ॥
मिथ्या सकल जगदिदं सत्यं किं तु प्रतिष्ठितं ब्रह्म ॥ १९ ॥

सुश्लोकेति । खरो राक्षसविशेषः रलयोः सावर्ण्यात् खलश्च गर्दभप्रायश्च ॥ १५ ॥

वेदांताधिकारिणां साधनचतुष्टयसम्पन्नत्वाच्चतुष्टये च नित्यानित्यवस्तुविवेकस्य मुख्यत्वात्तमेव दर्शयति । यदेवेति । यन्निभृतमत्यंतं देशतः कालतश्चेति यावत् सत्यं सतान्वयि तन्नित्यं ब्रह्मविकारेण भृतं युक्तं त्यकारेण सहितं सत्यं च नित्यमित्येव प्रतीयमानापि विचारेण या नास्ति सा माया तदनित्यं । मा शब्दो निषेधवाची मा नास्ति या सा माया विचारो विवेकः यद्वा विचारो विष्णुस्तदुपासनया ॥ १६ ॥

जगदाकारेण प्रतीयमानाज्ञानाभावस्य विचाराधीनत्वात्तस्य च गुरुकृपासाध्यत्वात्तमेव स्तौति । धीगुरोरिति । श्रीगुरोर्देशिकस्य बृहस्पतेश्च । तमोऽज्ञानं राहुश्च । गुरोरानुकूल्ये यथा राहुर्बाधितुं नेष्टे तथा देशिककृपायां सत्यामज्ञानं ॥ १७ ॥

इदं च साक्षाद्धरिरेवाहेत्याह । परमेति । गुरुगुरुगुरु इति सिंहस्य मंद्रशब्दानुकरणं न हि प्रल्हादस्याभिजनता न च मतिर्न च वयस्तथापि गर्भे नारदेनानुगृहीत इति तदर्थे ममैतादृग्रूपभाक्त्वं संप्रतिपन्नं तस्माद्गुरोरन्यन्मत्प्राप्तये साधनं नास्तीति हर्षव्याकुलतया तादृशशब्दं व्याहरन् नृसिंह आविरभूदिति ॥ १८ ॥

सद्गुरुरुपदिशति अध्यारोपापवादन्यायेनेत्याह । नगघटितमिति । हे सौम्य इदं दृश्यमानं सकलजगत् किंचिन्नगैः स्थावरैर्घटितं किंचिच्चलैर्जंगमैर्घटितं स्थावरजंगमात्मकमस्ति । एतत्सर्वं जडोपरचितं विद्धि । जडेनाज्ञानेनोपरचितं ननुजडेन केवलेनोपरचनं कथं स्यादिति चेत् तत्कलोपचितं तस्य ब्रह्मणो या कला ईक्षणरूपा शक्तिस्तयोपचितं समृद्धं एवमध्यारोपमुक्त्वापवादमाह । इदं सकलजगत् मिथ्यासत्यत्वेन ब्रह्मैवावशिष्यते रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववत् । शब्दतोऽपीदं निरूपयितुं शक्यते । यथा सकलजगत् नगघटितं गकारेण च घटितं न भवति गकारो गतः । अवशिष्ट

मायाब्रह्मसमागमादुदितवानेष प्रपंचो मृषे-
त्येवं सत्यपि सत्यतामुपदिशंत्येकेऽस्यतान् ( तत् ) किं ब्रुवे ॥
आदौ ब्रह्म नपुंसकं सुविदितं जायास्य माया वशा ।
किं ताभ्यामुदितस्य तस्य जगतः सत्यत्वगंधोऽप्यहो ॥ २० ॥
वंध्यायास्तनयः सुगंधिसिकतातैलैः समभ्यज्य च ।
स्नात्वा मांगलिकैः कुरंगसलिलैर्धृत्वा खपुष्पस्रजम् ॥
कर्तुं वांछति गार्दभेन विधिना षंढस्य पुत्र्या सहो-
द्वाहं तत्र च दक्षिणा चल सखे पारेपरार्धं मिलेत् ॥ २१ ॥
शैलाधीशधरः कुमारस्तुषितः सत्याऽन्वितोऽब्जांकितो ।
गंगाभूतियुतो विनायकहितश्चक्षुःश्रवो भूषितः ॥
इत्थं नाम मनागपि प्रथयते नोमाधवो माधवा-
द्भेदं यश्च विभाति सोऽतिमगुणस्थानोत्थितो नान्यथा ॥ २२ ॥

सकलजत् पुनश्च लघटितं चकारान्नेत्यनुकृष्यते लकारघटितं न भवति । लकारो गतः । अवशिष्टं सकजत् पुनर्जडोपरचितं जकारस्य लोपस्तेन रचितं यस्मिन् डलयोरैक्यात् जकारो गतः । अवशिष्टं सकत पुनस्तत्कलोपचितं यदवशिष्टं तत् कस्य लोपस्तेन चितं युक्तं ककारो गतः । अवशिष्टं सत् ब्रह्म जगत आदावंते च तदेवावशिष्यते । एतदेतस्य स्वरूपचर्ययैव ज्ञायत इति ध्येयं ॥ १९ ॥

एवं मिथ्यारूपस्यास्य प्रपंचस्य सत्यतामुपदिशतः कांश्चिद्विदुष उपालभते । मायेति । सुविदितं सर्वैः सर्वत्रज्ञातं तत्प्राति जगदुत्पादने तस्य माया स्त्री वशा वंध्या वशीभूता च नपुंसकाद्वंध्यायाबहून्यपत्यानि जातानीत्युक्ते यो नाम प्रमाता दृढं विश्वसेत् सोऽत्र विश्वसेदिति ॥ २० ॥

एतत्प्रपंचार्थमेव तज्जातीयं पद्यं निबध्नाति । वंध्यायास्तनय इति । कस्यचिद्दक्षिणार्थिनो याचकस्यान्यं तादृशं प्रति उक्तिरियं परार्धस्य । पार इति पारेपरार्धं संख्या तु परार्धपर्यंता तदूर्ध्वं संख्याभावात् ॥ २१ ॥

एवमद्वैतसिद्धौ यत्पुनर्द्वैतं भासते तन्मायागुणकृतं नान्यथेत्यत्र निदर्शनमाह । शैलेति । कैलासे धरते ऽवतिष्ठते तथोक्तः । धृङ् अवस्थाने । गोवर्धनधरश्च । कुमारेण स्वामिना तुष्टः कुर्भूर्देवी मारो मदनश्च ताभ्यां तुष्टः । सत्या पार्वत्या सत्यया सत्यभामयान्वित एकं पदं अब्जेन चंद्रेण शंखेन पद्मेन च । भूतिर्भस्म संपच्च । विनायको गणेशः वीनां पक्षिणां नायको गरुडश्च । सर्पभूषणः शेषशायी च । एवमुमाधवः शिवो माधवाद्भेदं न प्रथयते । यश्च भासते सोऽतिमो गुणस्तमोगुणस्तस्य स्थानं स्थितिस्तत्कृतोऽयं न पारमार्थिकः । शब्दतोऽपि अदेङ् गुणइति अकार एकार ओकारश्चेति वर्णत्रयं गुणशब्दाभिधेयं तत्रांत्यो गुणः कः ओकारस्तस्य स्थानं किं उकारः स्थानेऽ-

वित्तार्थं यतसे भृशं यदनिशं शंसार्थमप्यात्मनो ।
ह्यर्थं तन्मम मित्र तत्र भवतो नात्यंतिकं स्यात्सुखम् ॥
गुर्वाराधनतत्परेण मनसा कुर्वात्मशं साधनं ।
किं तस्मिन्नुपलभ्यते न हि धनं नो वात्मनः शंसनम् ॥ २३ ॥
तद्वित्तं त्वसुखं जनस्य नियतं यत्प्रार्थ्यते कुप्रभो-
र्वित्तः सत्तम वित्तचित्तजमदोन्मत्तेन चित्तेन यः ॥
कस्योऽहं कथमस्मि कोऽहमिति तत्कुर्वात्मनः सर्वदा ।
सद्युक्त्या बहुशोधनं न बहुशस्तत्रापि किंस्विद्धनम् ॥ २४ ॥
मिलेद्यदयुतं धनं तदधनं धनं यद्युवै ।
मिलेत नियुतं धनं निधनमेव तज्जायते ॥
तथा धनपरार्धकं निखिलभावहीनात्मकं ।
तदक्षरपदांतरे स्थितमरे धनं सर्वथा ॥ २५ ॥

तरतमइति उकार ओष्ठ्यत्वात्तादृशस्य ओकारस्य स्थानं भवति । एवं चायमुमा-धवः स माधव इत्युकारकृतो भेदो नान्यथा ॥ २२ ॥

निरतिशयात्मसुखसाधनं विहायापातरमणीयसुखसाधनद्रव्यार्जनं न कार्यमित्या शयेनाह वित्तार्थमिति । लोके हि केचिद्द्रव्यमेवार्जयंति परे आर्जितद्रव्यत्यागेन कीर्तिं तदुभयमपि नात्यंतिकसुखकारणं आत्यंतिक सुखसाधनेनैव मनोजयो वासनाक्षयो हरिभक्तिरूपेण तन्निरतिशयानंदलक्षणं सुखं तु प्राप्नुयादेव । किं च यदर्थं त्वं यतसे तदुभयमपि तत्रानुषंगिकं नास्तीति न किं तूपलभ्यत एव यथा त्मशंसाधनं आत्मनः शं सुखं तस्य साधनं अस्मिन् पदे आत्मशंसा धनं च वर्तत एवेति ॥ २३ ॥

तद्वित्तमिति ।हे सत्तम यत् कुप्रभो भूपतेर्वित्तं याच्यते तज्जनस्यासुखं सुखकारकं न भवति । यद्वा असूनां प्राणानां खं जनस्य हेतुरितिशेषः । यतः स कुप्रभुः कुत्सितप्रभुः तदेव विशदयति यो धनमदेन मदोन्मत्तेन मनसा वित्तः ख्यात स्तस्मादात्मविषयकविचारमेव कुरु तेन परमसुखं स्यात् । किं च यदर्थं त्वं यतसे तद्धनमपि तत्रानुषंगिकं नास्तीति न आत्मनः बहुशोधनमित्यत्र बहुशः धनं वर्तत एवेति ॥ २४ ॥

किं च यदपि मेलितं धनं न धनं भवति । धनं तु ब्रह्मपद एव स्थितमित्याह । मिलेदिति । अयुतं दशसहस्रं धनं न धनं यस्य कस्यापि सकाशेऽस्त्येवेति अकारेण युतं युक्तं धनं अधनमेव नियुतं लक्षं तत्तु अर्जनरक्षणादिना मरणरूपमेव यन्नि-कारेण युतं धनं निधनमेव तत् तथा धनपरार्धं धनस्य परार्धं परमसंख्यावधिसंख्यं परार्धपर्यंता हि संख्या ज्योतिःशास्त्रप्रसिद्धा एवं तर्हि किमपि नास्ति धनशद्बस्य

अनुक्रमणिका

आत्मनो बंधने हेतुं चित्तं क्षिणु हि यत्नतः ॥
चित्तस्य तस्य क्षयतः केवला चित्प्रकाशते ॥ २६ ॥
सत्यां विरक्तौ विपिनेऽपि वासे सत्यप्यथ ब्रह्मभवोपदेशे ॥
निवृत्तिसिद्धिः परमा समाधावेवेत्युवाचेह मृकंडुसूनुः ॥ २७ ॥
अये मनोमत्तमतंगजोऽयमितस्ततश्चंक्रमणो रजोभिः ॥
क्रीडन्सदा पिप्पलभोगतुष्टस्तच्छांतये त्वं हरिमाश्रयस्व ॥ २८ ॥
मर्यादा न च यस्य यो मृतमयो यस्मिंच्छुचिर्नीचगैः ।
संतर्प्यो न च वाडवः किल जलैर्न स्वातिवर्षेऽपि वा ॥
मुक्ता नित्यममंदरागमथनादुच्चैःश्रवा वा हरि-
र्नो लभ्यस्तदयं भवो हि नितरां वारां निधेर्दुस्तरः ॥ २९ ॥

धः पूर्वार्धे न परार्धे यश्च नकारः सोऽभावएवधनं तु अक्षरपदांतरे ब्रह्मपदे विष्णुपदे या 'अक्षरंब्रह्म परमं सदसत्क्षरमक्षर' मित्युक्ते दृश्यते । नित्यं अक्षराणि अकारमारभ्य क्षकारपर्यंतानि तत्र ये पदे पकारदकाररूपे तन्मध्ये धनेतिसर्वदा स्थितमिति यथा तथदधनपफबभमेति अक्षरशब्दो हि स्वरे रूढः स्वरव्यंजनरूपेऽपि प्रत्युज्यते यथा 'मकारतृतीयाक्षरो भवतीति, श्रुति । 'मंत्रराजः षडक्षरः' इत्यादि स्मृतिश्च पद इत्यत्र क्रमोऽविवक्षितः अतो न धनार्थं यत्नं कुर्यात्किंतु ब्रह्मविद्भवेत् ब्रह्मनिष्ठं प्रति तु धनमेव स्वयं प्रार्थयते ममांगीकारः कार्य इति स तु तत्प्रति न कटाक्षलेशमात्रेणापि संभावयतीति पूर्णधनत्वादिति तात्पर्यं ॥ २५ ॥

'एक एव मनोज यो जितः सर्वार्थसिद्धिद इति' वासिष्ठोक्तेर्मनोजयमंतरेणात्मप्राप्तेर-भावात्तत्क्षयमाह आत्मनइति । चित्तस्य तस्य क्षये चित् स्वयमेव प्रकाशते यथा चित्तसंबंधिनस्तत्कारस्य क्षये लेपेऽर्थाच्चिदित्येवावशिष्यते ॥ २६ ॥

चित्तजयस्य निरोधसमाधिरेवोपाय इत्याह । सत्यामिति । वैराग्ये वनवासे ब्रह्मणः शिवस्य चोपदेशेऽपि समाधावेव निवृत्तिसिद्धिः । चित्तस्य विषयोन्मुखतापरिहारेणात्मा-भिमुखीभावः यथा सुरथस्य राज्ञः समाधेर्नाम वैश्यस्य च समाने वैराग्ये विपिनवासे ब्रह्मभवस्य सुमेधोपरपर्यायस्य वसिष्ठस्योपदेशे समानेपि निवृत्तिसिद्धिः आत्माभिमुखी-भावः समाधावेव नान्यत्रेति सप्तशत्याख्यदेवीचरिते स्पष्ट ॥ २७ ॥

सुगमोपायमाह अय इति । रजः रजोगुणः धूलिश्च । पिप्पलं विषयसुखं तस्य यो भोगः तयोरन्यः पिप्पलं स्वाद्वस्यात्र तथा स्वीकारात् । पिप्पलस्याश्वत्थस्य गोभोगः भक्षणं स हि गजाय रोचते । पिप्पलः कुंजराशन इति । हरिं सिंहं च प्राणस्यंदनिरोधात्सत्संगाद्वासनात्यागाद्धरिचरणभक्तियोगान्मनः स्ववेगं जहाति शनै' रित्याचार्योक्तेः ॥ २८ ॥

सर्वानर्थभूतस्य संसारस्य निवृत्तिरेव परमपुरुषार्थ इति निवर्त्यस्य तस्य स्वरूपमाह



अनुक्रमणिका

विहीनः स्नेहलेशेन निर्दशश्च निरंजनः ॥
अध्यात्मज्ञानदीपोऽयं तमो हंत्यचलप्रभः ॥ ३० ॥
कर्मसाक्षितिरोभावे दोषावाप्तिरुदीर्यते ॥
आविर्भावे पुनस्तस्य सर्वतः सुदिनं भवेत् ॥ ३१ ॥
इतरभजनघनरसतः फलनिष्पत्तिर्न संभवेदिति न ॥
मुक्ताः परंतु मन्ये स्वातिघनरसं विना न जायेरन् ॥ ३२ ॥
संसारिणामिहामृतलाभोऽमृतमध्यवर्तिनामपि न ॥
मीनानामिव तत्राप्रत्यङ्मुखतैव जायते विघ्नः ॥ ३३ ॥
स्त्रीत्वं न पुंस्त्वं न नपुंसकत्वं न वा विभक्तिर्वचनं न यत्र ॥
तस्याव्ययस्य प्रतिलब्धयेऽत्र स्वस्थानमेवोपदिशंति संतः ॥ ३४ ॥

मर्यादेति । मर्यादा कूलभूमिरवधिश्च अमृतमयः उदकमयः मृतमयश्च मृतेन जननमपि लक्ष्यते । शुचिर्बाडवः वाडवानलः शुद्धो विप्रश्च नीचगैर्जलैः निम्नप्रवणैरुदकैः नीचानुसारिभिर्जडैः डलयोरैक्यात् स्वातिवर्षः स्वातिनक्षत्रवृष्टिः स्वस्य द्रव्यस्यातिवृष्टिः प्राप्तिश्च । मुक्ता मौक्तिकानि जीवन्मुक्ताश्च । अमंदस्तीव्रो रागः प्रीति स्तेनमथन-मनलसतया व्यवहारः । मंदरसंज्ञकोऽगः शैलस्तेन मथनं निलोडनंच । उच्चैः-श्रवानाम हरिरश्वः महायशा भगवांश्च ॥ २९ ॥

तन्निवृत्तिसाधनमात्मज्ञानमेवेत्याह विहीन इति स्नेहः प्रेमा तैलं च दशा वयोवस्था-वर्तिश्च । अंजनं विषयसंबंधः कज्जलं च । तमः संसारकारणमूलाज्ञानमंधकारश्च । अचलप्रभोऽव्याहतप्रभः वातादिना चलप्रभश्च । प्रसिद्धदीपादयं विलक्षणस्वभावः॥३०॥

आत्मज्ञानाभावे यत्कृतं तद्बंधायेत्याह कर्मसाक्षी आत्मा सूर्यश्च । दोषावाप्तिर्दोषस्य प्राप्तिः रात्र्यवाप्तिश्च । सुदिनं पुण्यं सुष्ठुदिवसश्च ॥ ३१ ॥

आत्मभिन्नतयेतरदेवतोपासने स्वर्गादिफलं भवति न तु मोक्ष इत्याह । इतरेति । इतरेषां देवानां भजने यः घनः आर्द्रः रसः प्रेमा इतरो यो भजनः नक्षत्रजनः स्वात्यतिरिक्तो मृगादिस्तस्य घनरसः उदकवर्षं च । फलनिष्पत्तिः स्वर्गादिफलप्राप्तिः धान्यसं-वृद्धिश्च । मुक्ता जीवन्मुक्ताः मौक्तिकानि च । स्वातिघनरसः आत्मत्वेन देवभजन विषयको यो घनरसः आसक्तिः स्वातिनक्षत्रोदकं च ॥ ३२ ॥

ननु ब्रह्मणः सर्वात्मकत्वेन तत्रस्थानामस्माकं तल्लाभः कुतो नास्तीत्यत्राह । संसा-रिणामिति । अमृतलाभः वस्तुलाभः जललाभश्च । अमृतं ब्रह्म तत्रस्थानां जलांतर्व-र्तिनां च प्रत्यगभिन्नात्मप्रवणताभावः प्रत्यगुल्लवनाभावश्च ॥ ३३ ॥

निर्धर्मकस्य वस्तुनः स्वात्मन्येवान्वेषणं कार्यमित्युपदिशंतीत्याह । स्त्रीत्वमिति । विभक्तिः परिच्छेदः प्रथमादिसप्तम्यंता च । वचनमुक्तिः एकद्विबहुत्वोपाधिकं च । अव्ययस्य अविनाशिनः परमात्मनः अंतरा मुहुस् इत्यादिरूपस्य च । स्वस्थानं

अचलः किल संसारो नृणां परम दुःखदः ॥
तत्र स्वरूपसंधानं मन्येऽहं सुखसाधम् ॥ ३५ ॥
संसारसागरस्त्वेष दोषाकरसमुद्भवः ॥
तच्छोषकारकं ब्रह्मतेज एकं विराजयते ॥ ३६ ॥
दोषोद्रेकभवे प्रभूततमसि व्याप्ते द्विजानां व्रजो ।
मूढो नष्टसुदृक् समीपगमपि स्थाणुं परं स्वाश्रयम् ॥
द्रष्टुं न क्षमते चरंति परितः किंचात्मघोषद्विष-
स्तत्रानंतपदोदयः सुखयिता स्यात्कर्मसाक्षी विभुः ॥ ३७ ॥
आत्माराम इहैक एव तनुते पुंसां परां निर्वृतिं ।
संसारातपतापतप्तवपुषामत्यंतदुःस्थात्मनाम् ॥
पूर्णाखंडरसेन बिभ्रति भृशं सर्वागमाः सद्रुचिं ।
यत्रामी शुकनीलकंठकपिराड्ढंसा रमंतेऽनिशम् ॥ ३८ ॥

आत्मरूपस्थानं स्वरित्यव्ययस्थानं स्वरादिगणश्च । स्वरादि निपातमव्ययमिति पाणिनि स्मरणात् । स्त्रीत्वादि शून्यमव्ययं यथा स्वरादिगणे लभ्यते तथा परमात्मवस्तु आत्मन्येव लभ्यत इत्यर्थः ॥ ३४ ॥

एवं निवर्त्यं संसारं निवर्तकं चात्मज्ञानं पृथक्त्वेन निरूप्य समुच्चयेन निरूपयति पंचभिः । अचलइति । अचलः व्यवहारेण नित्यः पर्वतश्च । स्वरूपस्य संधानमनुसंधानं सर्वानुस्यूतत्वेन स्वरोर्बेजस्योपासनं च ॥ ३५ ॥

संसारसागरइति । दोषाकरस्य दोषराशेश्चंद्रस्य च । तस्य संसारस्य शोषं क्षयं करोति तादृशं ब्रह्मरूपं तेज एवैकं तं सागरं शोषयति तच्छोषं करके कुंभ भवं कारकं ब्रह्मतेजो द्विजरूपं तेजः आगस्त्याख्यमेवैकं ॥ ३६ ॥

दोषोद्रेकभव इति । दोषोद्रेकः बंधककर्मोद्रेकः तन्मूले भवे कीदृशे प्रभूततमसि बहलाज्ञाने रात्र्युद्रेकसंभवे गाढांधकारे च । द्विजानां विप्राणां पक्षिणां च । नष्टसुष्टुज्ञानः नष्टनेत्रशक्तिश्च । द्रष्टुं ज्ञातुं वीक्षितुं च । स्थाणुं शिवं परमात्मानं वृक्षं च । आत्मानं घोषयंतीत्यात्मघोषाः वेदांतिनस्तेषां द्विषः शत्रवो नास्तिकाः आत्मघोषाः काकास्तेषां द्विषो घूकाश्च । ते हि रात्रौ प्रवृत्तदृशः अनंतो विष्णुस्तस्य पदं चरणं तस्मादुदयो यस्य । भगवदुपासनवशाल्लब्ध । इत्यर्थः अनंतमाकाशस्तद्रूपं यत्पदं तत्रोदयो यस्य । कर्मसाक्षी परमात्मा सूर्यश्च ॥ ३७ ॥

आत्माराम इति । आत्मैव आराम उद्यानं पूर्णाखंडरसेन हेतुना अनवच्छिन्नजलसमृद्ध्या हेतुना च आगमाः शास्त्राणि अगमा वृक्षाश्च । सद्रुचिमुत्तमप्रीतिप्रतिपादनविषये सम्यक् शोभाविशेषं च । शुको योगींद्रः कीरश्च । नीलकंठो भगवान् शिवः मयूरश्च । कपिराट् हनुमान् कपिश्रेष्ठश्च । हंसाः परमहंसाः पक्षिविशेषाश्च ॥ ३८ ॥

यो वै पंचमहाभूतविवर्तपरिबाधितः ॥
तस्य ब्रह्मविचारोऽयं साक्षात्पंचाक्षरी मतः ॥ ३९ ॥
न योगे नैव करणे मूलाधिष्ठानमिष्यते ॥
मूलाधिष्ठानसंप्राप्तिर्भजने सहजा नृणम् ॥ ४० ॥
बालाः स्थूलाक्षरोपास्तिप्रतिकूला भवंति चेत् ॥
सूक्ष्माक्षरं न लेखार्हस्थिति तत्करगं भवेत् ॥ ४१ ॥
यदि न हरेः सारथ्यं गुरोर्नरोऽधिगतशास्त्रविद्योऽपि ॥
जायेत कलिभवमहाभारतरणदक्षिणः कथंकारम् ॥ ४२ ॥
सत्तारकः स्याद्भजनेन युक्तो नृणां समृद्धः किल सत्पथोऽपि ॥
साहाय्यकं चेन्न शतह्रदाया घनाघनः किं जलदानदक्षः ॥ ४३ ॥
हरिपरिचरणं वृषानुबद्धं विहितं क्षेत्रविशुद्धयेऽथ तत्र ॥
घनसुभगमहोदयामृतार्द्रे प्रभवति सत्प्रहितं स्वलब्धिबीजम् ॥ ४४ ॥

यो वै इति । पंचाक्षरी भूताद्युपद्रवनिवर्तकः पंचाक्षरमंत्रोपासकः पंचपरिमिताक्षरवांश्च । पंचमहाभूतानि आकाशादीनि सएव निवर्तः मिथ्याभासः पंचानां महतां भूतानां पिशाचानां विवर्तः अभिग्रहः ब्रह्मविचार इति पंचाक्षराणि ॥ ३९ ॥

उक्तात्मज्ञानं भगवद्भक्त्यैकलभ्यमित्याह । न योग इति । योगे अष्टांगे विष्कंभादिषु च । करणे ज्योतिष्टोमादि क्रियायां बवादिषु च। मूलभूतमधिष्ठानं परमात्मा मूलनक्षत्रस्थितिश्च । भजने भक्तौ नक्षत्रजने च ॥ ४० ॥

बाला इति । बाला अज्ञाः शिशवश्च । स्थूलाक्षरं व्यक्तिमापन्नं सगुणं ब्रह्मरामकृष्णशिवादि महांत्यक्षराणि अआ इत्यादीनि च । सूक्ष्माक्षरं परमसूक्ष्मवस्तुभूतं ब्रह्म अन्यत्प्रसिद्धं । लेखेषु देवेष्वेव शुद्धसात्विकत्वात् अर्हा योग्या स्थितिर्यस्य लेखेषु पत्रादिलेखेषु च । न हि पत्रादिव्यवहारः स्थूलाक्षरैर्भवति ॥ ४१ ॥

यदि न हरेरिति । सारथ्यं सूतत्वं च। गुरुः सद्गुरुर्द्रोणश्च नरो मनुजः पार्थश्च । शास्त्रविद्या तत्त्वमस्यादि वाक्यजनितज्ञानं शस्त्रसंबंधिनी विद्या च कलियुगोद्भवमहाभारस्य तरणे उत्तरणे दक्षिणः कलिः कलहस्तेन भवो यस्य तस्मिन् महाभारतानां रणे युद्धे च ॥ ४२ ॥

सत्तारक इति । सत्पथो धर्ममार्गः नक्षत्रपथः आकाशश्च । यो हि भजनयुक्तः स एव तारकः उत्तमताराविशिष्टश्च । भजनं भक्तिः नक्षत्रजनश्च । शतह्रदा विद्युत् साचानेकह्रदविशिष्टेति जलवृष्टिहेतुः ॥ ४३ ॥

हरीति । हरेर्भगवतः हलेर्महतो लांगलस्य च । रलयोरैक्यात् । परिचरणं भजनं परितः प्रवर्तनं च वृषेण स्वधर्मेण बलीवर्देन च क्षेत्रस्य शरीरस्य केदारस्य च घनवत्सुभगं महः कांतिर्यस्य हरेर्दयामृतार्द्रे घनस्य यः सुष्ठुभेषु नक्षत्रेषु मृगादिषु

न शास्त्रव्यासंगान्न च विवरणान्नानुकरणा-
न्न संकल्पान्नैवाध्यवसितिविधानादपि मुहुः ॥
नृणा साक्षात्प्रादुर्भवति सुरतानंदविभवो ।
विना रामासंगाद्विविधकरणव्यूहसुभगात् ॥ ४५ ॥
खगासने भव्यगुणेंतरेण वरं शरं रीतिधरं नियोज्य ॥
उपासनस्यातिबलेन सौम्य त्वं सूक्ष्मलक्ष्यं प्रति विध्य शीघ्रम् ॥४६॥
शंकरे भक्तिमान् स्याच्चेच्छं करे तस्य निश्चितम् ॥
या तनावात्मबुद्धिस्तु यातना सा सनातनी ॥ ४७ ॥
बह्वर्भकं महाभगमपि कांताभरसमन्वितं भवनम् ॥
भवति सदाभरणस्थलमपि भावस्थितिविवर्जितं तु वनम् ॥ ४८ ॥
मुमुक्षवः संपरिशीलयं तु जनाः सनादच्युतसद्गुणांस्तान् ॥
यतो हि मुक्ता अपि तैर्विमुक्ताः सद्यो विभक्ताः पतिता भवंति ॥४९॥

महोदयस्तस्माद्यदमृतं [ जलं ] तेनार्द्रे सद्भिः प्रहितमुपदिष्टं सत् सम्यगुप्तंच आत्मलाभस्य बीजं ज्ञानं स्वस्य द्रव्यस्य लाभो यस्मात्तद्बीजं च ॥ ४४ ॥

न शास्त्रेति । सुरतानंदः स्वस्मिन् यो देवताभावस्तत्प्रयुक्तो य आनंदः रतिसुखं च । रामे आसंगोदृढासक्तिः स्त्रीसंगश्च । करणानि श्रवणकीर्तनादीनि चुंबनाश्लेषादीनि धेनुकादीन्यासनानि वा ॥ ४५ ॥

खगासनइति । भव्यगुणे उत्तमगुणे उत्तममौर्वीके च । खगासने गरुडासने शरासनेच । अंतरेण मध्ये रीतिधरं ' री ' इत्याकारकं वर्णं धरति तत् शरं शरीरं पित्तलरेखाभूषितं बाणं च । उभयत्राप्यंतरेण रीतिधरं स्वनिष्ठसौष्ठवधरं च । उपासनस्य उपास्त्याः शराभ्यासस्य च । सूक्ष्मं लक्ष्यं परमात्मवस्तु अणुशरव्यं च ॥ ४६ ॥

शंकर इति । शं सुखं तनौ आत्मबुद्धिर्देहेऽहं भावः ॥ ४७ ॥

भक्तिहीनं सर्वं न शोभत इत्याह बह्वर्भकमिति । शिशुभिरलंकृतं महैश्वर्यं स्त्रीसमृद्धमुत्तमाभरणं तत्तत्स्थाने एतादृशमपि भवनं गृहं भावस्थित्या भक्त्या हीनं चेद्वनमेव भवति भस्य भवर्णस्य अवस्थानेन हीनं भवनं वनमेवावतिष्ठते उक्तसर्वविशेषणेषु भकारवर्जनेनार्थः । बह्वर्काख्यवृक्षयुक्तं यद्वा बहुरर्कप्रतापो यत्र छायाभावात् । महापर्वतप्रायं दुर्गमवर्त्मयुक्तं सदारणार्हस्थलं यद्वा दारणस्थलसहितं वनं तदप्येतादृशं न तु रमणीयं ॥ ४८ ॥

भक्तिं विना मुक्ताअपि नैव शोभंत इत्याह मुमुक्षवइति अच्युतस्य सद्गुणान्मुक्ताः जीवन्मुक्ताः मौक्तिकानिच तैरच्युतसद्गुणैः अत्रुटितसाधुदोरकैर्विभक्ताः पृथग्भूता ज्ञानरक्षकाभावात् पतिताः पातित्ययुक्तागलिताश्च येन्येऽरविंदाक्षवियुक्तमानिन



अनुक्रमणिका

श्रीरामपादांबुजसेवकेभ्यः कथार्चनध्यानपरायणेभ्यः ॥
सांतानिकामोदकषायितेभ्यो रोचेत किं रेऽमृतसंपदेभ्यः ॥ ५० ॥
न पूजनं नो भजनं च यत्र न बंदिभावो न च मूर्तिबीक्षा ॥
फलं च किं तादृशवस्तुनः स्यादतोऽपवर्गत्वममुष्य लोके ॥ ५१ ॥
आदिमा भक्तिरित्येतत् सर्वसज्जनसंमतम् ॥
यद्यनाशोचिता सैव मुक्तिर्भवति निश्चितम् ॥ ५२ ॥
मातंगोऽपि प्रापमुक्तिं दुरापां भक्त्या पद्म पद्मनाभे समर्प्य ॥
तद्विप्राद्याः शुद्धजन्मान एव नैवेक्ष्यंते शार्ङ्गिणः प्रीणनाय ॥ ५३ ॥
यत्तु भगवदपराधस्थितमपि जघन्यकर्मनिरतत्वात् ॥
पुरुषोत्तमे भवेच्चेद्दृढभावं दृश्यतेऽस्य तिरूध्वम् ॥ ५४ ॥
मा राजकृपा मा रामा मा कुमार सुखगरिमा ॥
माराज मा स्वमहिमा पदपद्माराधनेऽस्तु ते प्रेमा ॥ ५५ ॥

स्त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यधोऽनादृत युष्मदंघ्रयइति भागवते ॥ ४९ ॥

भक्तास्तु मुक्तिं न स्पृहयंतीत्याह श्रीरामेति । रामभक्ता हि ब्रह्मलोकोपरितनान् सांतानिकाख्यलोकान् गच्छंति तत्रत्यानंदेन कषायितेभ्यः अमृतसंपन्मोक्षसंपन्नरोचते संतानिकातसक्षीरोपरितनो मंडः सायइति लोके तदामोदकषायितेभ्यः अमृतं दुग्धं न रोचत इति युक्तमेव ॥ ५० ॥

ते वदंति च न पूजमिमिति पूजनं फलं बंदिभावो भजनं मूर्तिबीक्षा च यत्र नास्तीति कृत्वा तादृशस्य अपवर्गत्वं लोके पवर्गरहितत्वं चेति ॥ ५१ ॥

अहेतुकी भक्तिर्मुक्तिरेवेत्याह आदिमेति आदिमा श्रेष्ठा आदौ वर्णे भकारे मकारो यस्यां सा अनाशोचिता आशया । उचिता समवेता तादृशी न भवति सा उचसमवाये अकारस्य नाशो यस्यां तत्र उना उकारेण चिता एवं भक्तिरित्यत्र भस्य मादेशे तदुत्तराकारस्य लोपे तत्र उकारनिवेशे मुक्तिर्भवतीति ॥ ५२ ॥

भक्तिर्जातिश्रैष्ठ्यं नापेक्षत इत्याह मातंगइति मातंगो गजः अंत्यजविशेषश्च ॥५३॥

तथा गुणवतामप्यपेक्ष्यत इत्याह यत्विति । भगवत्प्रोक्तकारित्वाभावान्नीचकर्मणि रतत्वेन भगवदपराधसितं प्राणिजातं यदृच्छया भगवति दृढभावं चेत्तस्याधोगति र्नास्ति यद्भगवद्योनिमद्वस्तु जघन्यकर्मणि मैथुने निरतत्वेनापरस्याधोभागेस्थितामप्युत्तमपुरुषे दृढभावं चेत्तस्योर्ध्वंगतिर्भवति पुरुषायिते विपरीतरते प्रवर्तत इत्यर्थः ॥ ५४ ॥

अतः कविस्तामेव भगवंतमभ्यर्थयते माराजेति । राजकृपा राः द्रव्यं रामा स्त्री कुमारसुखं स्वमाहात्म्यं च माभूत् हे माराज रमानाथ ॥ ५५ ॥

उदारांस्त्वहते नान्यान् प्र\` ३याम्यधि पार्वति ॥
श्रीरामभक्तिमाणिक्यमदेयमपि देहि मे ५६ ॥
भामे भा मे कथंकारं कामे का मे गतिर्भवेत् ॥
रामे रा मे परा भक्तिर्यामे यामे भजाम्यतः ॥ ५७ ॥
श्रांतोऽसि चेत् संसृतितीव्रतापतः सीतान्वितं मारुतपोतसेवितम् ॥
पलाशसंघातसमृद्धविक्रमं रामं धृताकारमुपेहि सत्वरम् ॥ ५८ ॥
यातायातैः सुबहुभिः श्रांतोऽसि यदि हे सखे ॥
एकं कुरु घनच्छायं सीतारामपदं भज ॥ ५९ ॥
विषयोपहितोऽचलस्थितिः सतमस्कः कनकांगनाप्रियः ॥
भव उग्र इहापि राघवस्मरणाच्छांतिमुपैति निर्भराम् ॥ ६० ॥
असौ भवभुजंगश्चेद्बाधतेऽति भयंकरः ॥
रामं नरेंद्रं भजत विनतानंदनं द्रुतम् ॥ ६१ ॥

उदारानिति त्वमेव उदाराः उः शंभुस्तस्य दाराः कुटुंबिन्युदारादानशूराश्च ॥५६॥

भामइति । भामे क्रोधेऽगीकृते मे भा शोभा कथं स्यात् । कामेऽगीकृते मे गतिः का स्यात् रामे परा भक्तिर्मे राः द्रव्यं अतः प्रतियामे राममेव भजामि ॥ ५७ ॥

यतो ज्ञानं भक्त्येकलभ्यं सा च भगवद्विषयिणीति संसारानिवृत्त्यर्थं सएवाश्रयणीय-इत्याह । श्रांतोऽसीति । भवदुःसहतापतः सम्यग्यः सृतिसंबंधी तीव्रतापस्ततश्च । पंथानः पदवी सृतिरित्यमरः । सीतयान्वितं शीतेनान्वितंच सशयोरैक्यात् वायुसुतेन हनुमता सेवितं मंदमारुतेन च पलाशिनो राक्षसास्तेषां सम्यग्घातो नाशस्तत्र समृद्धो विक्रमो यस्य पलाशिनो वृक्षास्तत् संघातः समूहस्तत्र वीनां पक्षिणां क्रमः पदन्यासो यत्र धृताकारं सगुणं रामं ब्रह्म रामपदेनासौ परं ब्रह्माभिधीयतइति श्रुतिः आकार-सहितं च राममारामं ॥ ५८ ॥

यातायातैरिति घनवच्छायाकांतिर्यस्य निबिडच्छायं च सीतायुक्तं रामचरणं शीतमारामपदं च यातायातं पुनरपि जननं पुनरपि मरणं गतागतं मार्गविषयं च ॥ ५९ ॥

विषयेति विषया उपहितायत्र विषेण यो यो मोहः स हितो गतो यस्मात् युपुरुपुलु-पु विमोहनेइति हिगताविति धात्वोरूपे ध्रुवास्थितिः कैलासवास्तव्यश्च साज्ञानः सतमोगुणश्च कनकमंगना च प्रिये यत्र कनकं धत्तूरो गौरी च प्रिये यस्य उग्रोऽपिभवः संसारः शिवश्च शांतिं निवृत्तिं परमानंदंच ॥ ६० ॥

असाविति नरेंद्रं राजानं विषवैद्यं च विनतानंदनं प्रणतानंददं गरुडं च वैनतेयत्वात् ॥ ६१ ॥

शुचिसान्निध्ययोगेन त्वदि रामोपगूहनात् ॥
कर्मसाक्षिसमालोकाद्ध्रुवं हेमंतवज्जयेत् ॥ ६२ ॥
अंधं तमश्चेदयि बाधते त्वां सरोजनेत्रं जगदेकसूत्रम् ॥
सुधाचरित्रं परमं पवित्रं कुरुष्व मित्रं वसुदेवपुत्रम् ॥ ६३ ॥
कृच्छ्रदविषयोपहितो भवो महापन्नगोऽतिभीषयति ॥
तद्भयशमनाय विना जिष्णुपविक्रममहं न कलयेऽन्यम् ॥ ६४ ॥
कुजन्मिप्रायेयं मदकरकलिव्यालिविषमा ।
कुदारव्यासंगप्रतिहतसुगोत्राऽतिभयदा ॥
द्विजिव्हैराकीर्णा व्यथयति महावंचकवती ।
प्रपंचारण्यानी भज भज सखे तन्नरहरिम् ॥ ६५ ॥
भ्रमयति [illegible] रसूतशेखरं कृष्णम् ॥
सद्गोरसेन सहसितमनुत्रुटिकं सर्वथा स्नेहम् ॥ ६६ ॥
पतितानां संसारांधतमसकूपे विनष्टदृष्टीनाम् ॥
महता विहिता महिता सुहिता स्यादच्युतावतारकथा ॥ ६७ ॥

शुचीति शुचिः साधुरग्निश्च रामोपगूहनंरामध्यानं स्त्रीणामाश्लेषश्च आत्मनो दर्शनं सूर्यातपसेवा च ॥ ६२ ॥

अंधंतमइति । अज्ञानं अंधकारश्च मित्रं सखायं सूर्यं च ॥ ६३ ॥

कृच्छ्रदविषयेति दुःखविषयसहितः कृच्छ्रप्रदेशसहितः कृच्छ्रदोयोविषेण योपः विमोहः युपुविमोहने तस्य हितं आधानं यस्मात् महापन्नगः सर्पः महापत्पर्वतो वा जिष्णुः अर्जुनः तं पाति स हरिः तस्य विक्रमः अवतारलीला जिष्णुपो हरिस्तस्य विः पक्षी गरुडस्तस्य क्रमः पदन्यासः जिष्णुरिंद्रस्तस्य पविर्वज्रस्तस्य क्रमः क्षेपश्च ॥ ६४ ॥

कुजन्मीति । कुत्सितप्राणिबहुला वृक्षप्राया च मदकरो यः कलिस्तस्य व्याघ्या विषमामदकलाः ये करिणस्तेषां च रल्योरैक्यात् कुत्सितस्त्रीव्यभिचारेण दूषित-कुला कुं दारयंति ते कुदाराः सूकरास्तद्व्यासंगेन उत्कीर्णभूमिः द्विजिव्हाः खलाः सर्पाश्च महावंचकाः प्रतारका जंबुकाश्च नरहरिं नरसिंहं ' अटव्यांनारसिंहश्चेति वचनात् ॥ ६५ ॥

भ्रमयतीति । नरः अर्जुनस्तस्य यः सूतशेखरः सारथिश्रेष्ठस्तं कृष्णं हे नर कृष्णं वर्णतः सूतशेखरं नाम रसायनं च सद्गोरसः साधूनां वाग्रसः दुग्धं च घृतं वा हसितेनस्मितेन सहितं स शर्करं च अनुत्रुटिकं त्रुटिः सूक्ष्मकालगानं प्रति तत् अनुगतसूक्ष्मैलाबीजं च स्नेहं गृहदारादिषु प्रेमाणं तैलं च ॥ ६६ ॥

पतितानामिति । नष्टज्ञानानां नष्टेक्षणानां च अच्युतावतारकथा भगवत्कीर्तनं अभ्रष्टसोपानमार्गवार्ता च ॥ ६७ ॥

पतितानां संसारांधतमसकूपे विनष्टदृष्टीनाम् ॥
एकं महद्धुपदिष्टं कष्टहरं चक्रिणो हि गुणभजनम् ॥ ६८ ॥
संसारे वर्तमानस्य नानादुष्कृतकारिणः ॥
यदि ते नरकाद्भीतिः कृष्णमेकं समाश्रय ॥ ६९ ॥
भवसागरं तरीतुं [illegible]सि चेत् सौम्य कुरु मदीयवचः ॥
यत्नां[illegible]तर विहाय यत्नं भज तारकेशकुलरत्नम् ॥ ७० ॥
द्वाविह दृष्टौ शरणीकर्तुं संसृतितरंगिणीतरणे ॥
उडुपकुलपतिः कृष्णः श्रीरामस्तरणिकुलपतिश्चान्यः ॥ ७१ ॥
जातो जलप्रसंगाद्विस्मारयति भ्रमोऽयमात्मानम् ॥
शुभमधुनार्द्ररसेन च सुरसंसेव्यं भजस्व चंडीशम् ॥ ७२ ॥
समसितरुचिराज्योपेतमरे नरकेसरिणं संसेवेथाः ॥
अमृताभिमुखः स्याः किं कुर्याद्दुःसहतापभवज्वर एषः ॥ ७३ ॥
व्यथयति बहुदोषभवोपताप एषोऽभ्रकायकृष्णाय ॥
स्पृहय सुखोदर्कायानेकसुरसभावनैः प्रसिद्धाय ॥ ७४ ॥

पतितानामिति । महाद्भिः सद्भिर्बलवद्भिश्च चक्रिणो भगवतोऽरघट्टस्य च गुणानां भजनं सेवनं गुणस्य स्थूलरज्जोश्च ॥ ६८ ॥

संसार इति । कृष्णो हि नरकस्य असुरविशेषस्य हंता ॥ ६९ ॥

भवसागरमिति । तारकाणामीशश्चंद्रस्तस्य कुले रत्नमिव श्रेष्ठं कृष्णं तारयंति ते तारकाः कर्णधारास्तत्कुलश्रेष्ठं च ॥ ७० ॥

द्वाविहेति । उडुपश्चंद्रः चर्मावनद्धवंशविदलनिर्मितं तरणसाधनं टोकरेति प्रसिद्धं च तरणिः सूर्यः नौकेति च ॥ ७१ ॥

जात इति । जलस्य जडस्य अविद्याया उदकस्य च भ्रमो भ्रांतिः शुभं अधुना उत्तममधुना च आर्द्ररसेन सांद्रप्रेम्णा आर्द्रकस्य रसेन च सुरैः संसेव्यं सुरसं सेव्यं च चंडीशं महादेवं राजचंडीश्वराख्यरसायनं च ॥ ७२ ॥

समसितेति । सम्यक् याः असिताः श्यामलाः रुचयः तासां राज्या पंक्त्या उपेतं यद्वा समा तुल्या या सिता श्वेता रुचिस्तत्पंक्त्या यद्वा मया लक्ष्म्या सहितः समः सितरुचिः श्वेतद्युतिः राज्येन त्रिभुवनाधिपत्येन उपेतः सचासाविति विशेषणोभयपदकर्मधारयः तुल्यशर्करायुत सुंदरघृतेनोपेतं च नरकेसरिणं नृसिंहं नृकेसर्याख्यं रसायनं च अमृताभिमुखः मोक्षाभिमुखः दुग्धपानाभिमुखश्च भवः तरुणः संसारश्च ॥ ७३ ॥

व्यथयतीति । अनेकदोषसंभवः । संसारसंबंधी तापः उल्बणवातपित्तादिदोषसंभवः ज्वरतापः रोगः अभ्रवत् कृष्णः कायो यस्य तस्मै कृष्णाय अभ्रकाय रसा-

## जीं मराठी काव्यें उपलब्ध आहेत त्यांची यादी.

| नंबर. | कवि. | नांव. | वृत्त. | संख्या. |
|---|---|---|---|---|
| ७४. | आनंदतनय. | शबरी आख्यान. | श्लोक. | २३. |
| ७५. | ,, | कृष्णचरित्र. | ,, | २५. |
| ७६. | ———— | गजगौरीव्रत. | श्लो. | ४३. |
| ७७. | सोयरोबा. | अद्वयानंद. | ओवी. | ६००. |
| ७८. | मंगेश कवि. | राधाकृष्णविलास. | श्लोक. | १७१. |
| ७९. | वेंकट. | योगवासिष्ठ. | अनुष्टुभ. | ५००. |
| ८०. | सुभानंत. | उद्योगपर्व. | ओवी. | ६४०१. |
| ८१. | तुकाराम. | बालक्रीडा. | अभंग. | ८९०. |
| ८२. | ———— | हनुमंत भेट. | ओवी. | १७०. |
| ८३. | एकनाथ. | हस्तामलक. | ओवी. | ६४८. |
| ८४. | श्रीधर. | मल्लारीमाहात्म्य. | ,, | ३६०. (सुमारें) |
| ८५. | आनंदतनय. | श्रीकृष्णचरित्र. | श्लोक. | १६. |
| ८६. | रामदास. | पंचसमासी. | ओवी. | १२५. |
| ८७. | गोसावीनंदन. | ज्ञानमोदक. | ,, | ३५५. |
| ८८. | ——— | धर्मसिंधु. | ओवी वगैरे. | ५००. (सुमारें) |
| ८९. | शिवदास. | किरकोळ प्रकरणें. | अभंग, ओवी वगैरे. | २०००. (सुमारें) |
| ९०. | हरिराज. | मुद्गल आर्यांचें भाषांतर. | श्लोक. | १०८. |
| ९१. | ——— | तत्वसार. | ,, | १०५. |
| ९२. | ज्ञानेश्वर. | स्वात्मसुख. | ओवी. | २३०. |
| ९३. | कौलराम कल्याण. | ——— | श्लोक. | ४०. |
| ९४. | रामदास. | प्राणस्तोत्र. | अनुष्टुभ. | १६. |
| ९५. | ——— | क्षराक्षर. | श्लोक. | ३४. |
| ९६. | एकनाथ. | परिक्षित्याख्यान. | ओवी. | ५८. |
| ९७. | ——— | कृष्णकथा. | श्लोक. | ६३. |
| ९८. | एकनाथ. | हस्तामलक. | ओवी. | ६६५. |
| ९९. | गंगाधर | कुवलयानंदाच भाषांतर गद्यपद्य. | | |

समाप्त.

---

## संस्कृत ग्रंथ उपलब्ध आहेत त्यांची यादी.

| नंबर. | कवि. | ग्रंथ. | ग्रंथसंख्या. |
|---|---|---|---|
| १. | जगंनाथ. | रतिमन्मथ नाटक. | ५ अंक. |
| २. | ——— | प्रद्युम्नविजय. | ——— |
| ३. | वेंकट. | गंगापुरीविलास. | ——— |
| ४. | लोलिंबराज. | हरिविलास. | ७० |
| ५. | ——— | रतिरहस्य. | ——— |
| ६. | विश्वशंभु. | एकाक्षरी नाममाला. | ११५. |
| ७. | शुक. | प्रश्नोत्तरमाला. | ३१ |
| ८. | गंगाधर. | विलासगुच्छ. | २०. |

(पुढें चालू.)

# सूचना.

(१) सन १८७९–८०–८१–८२ सालचे १२ अंकाच्या प्रतीःज्यांस पाहिजे असतील त्यांणीं दर सालचे अंकांस ५ रू० ५ आणे प्रमाणें आम्हांकडे किंमत पाठविली असतां त्यांजकडे रवाना होतील. सन १८७८ सालचा पहिला अंक शिवाय करून बाकीचे अंक फुटकळ विकत मिळतील. दर अंकाबद्दल ៷८៷६ पाठविले असतां अंक रवाना होतील.

(२) वर्गणी खालीं लिहिलेले गृहस्थांकडे पाठविली असतां आम्हांस पोंचेल.

रा. रा. **श्रीधर गणेश** जिन्सीवाले एम. ए., प्रोफेसर **मुंबई.**
,, ,, शिवराम **परशुराम भिडे**, एम. ए. ........ **बडोदें.**
,, ,, जनार्दन **बाळाजी मोडक** बी. ए. हायस्कूल..**ठाणें.**
,, ,, **सावळाराम माधव** चिटणीस सायें ..... **इंदूर.**
,, ,, **वामन दाजी ओक**, मिटस्कूल ..........**नागपूर.**
,, ,, **विष्ण** रघुनाथ **नातू** अ० मा० हायस्कूल....**बेळगांव.**
,, ,, **गंगाधर पांडुरंग गद्रे** अ. मा. रा० हायस्कूल **कोल्हापूर.**
,, ,, **परशुराम भिकाजी भाटये** वकील ..........**रत्नागिरी.**
,, ,, **त्रिंबक केशव परचुरे** हेडस्मातर. ..........**अलीबाग.**
,, ,, **विष्णु मोरेश्वर** महाजनी, एम. ए. ........**उमरावती.**
,, ,, बळवंत **कमळाकर शिरस्तेदार** ........**अलीराजपूर.**
,, ,, **रामचंद्र बळवंत खांडेकर**, प्रायव्हेट सेक्रेटरी
नि॥ **श्री० आपा** साहेब आंग्रे सरकार........**ग्वाल्हेर.**
,, ,, **गोविंद नारायण केळकर**, बी. ए. **हायस्कूल नासिक.**

(३) हें पुस्तक सर्वांस घेण्यास सुलभ पडावें म्हणून याची किंमत वर्षास आगाऊ ४ रुपये ट० ह० ៷६ मागाहून ५ रुपये ៷८. आगाऊची मुदत पुस्तक घेऊं लागल्यापासून दोन महिन्यांचे आंत समजावी. पोष्टाचीं तिकिटें पाठविणें झाल्यास तीं अर्धा आणा किंमतीचीं असावीं व रुपयास ៷៷६ प्रमाणें वर्तावळा पाठवावा.

या पुस्तकासंबंधें हरएक प्रकारचा पत्रव्यवहार ठेवणें तो **काव्येतिहास-संग्रहाचे व्यवस्थापक, घर नंबर २५६, सदाशिव पेठ पुणें गोगटे यांचा वाडा** या पत्त्यावर ठेवावा.



अनुक्रमणिका